...क्रमाला सं० २४



# ...ाज्ये संस्कृत-साम्राज्यम्

( एकाङ्कि-नाटकम् )

... भारत का एक स्वर्णमय सांस्कृतिक दृश्य ... पुनरावृत्ति के लिए प्राणप्रण से प्रयत्न ... प्रत्येक स्वाभिमानी भारतीय नाग-...क का परम पवित्र कर्तव्य है।

सार्वभौम संस्कृत प्रचार कार्यालय

वा रा ण सी

संस्कृत प्रचार-पुस्तक माला सं० २८



# भोजराज्ये संस्कृत-साम्राज्यम्



( एकाङ्कि-नाटकम् )

मध्यकालीन भारत का एक स्वर्णमय सांस्कृतिक दृश्य जिसकी पुनरावृत्ति के लिए प्राणप्रण से प्रयत्न करना प्रत्येक स्वाभिमानी भारतीय नागरिक का परम पवित्र कर्तव्य है।

प्रणेता—

**वासुदेव द्विवेदी शास्त्री**

( सम्पादक—संस्कृत प्रचार-पुस्तकमाला )

**सार्वभौम संस्कृत प्रचार कार्यालय**

**वा रा ण सी**

# प्राक्कथन

दौर्भाग्यवश हमारे समाज में कुछ दिनों से यह धारणा बद्ध-मूल हो गई है कि संस्कृत एक बहुत ही कठिन भाषा है और इस-लिए उसका सीखना, समझना तथा सर्वसाधारण में उसका पुनः प्रचार होना एक दुःसाध्य काम है। इस भ्रान्त धारण को निर्मूल करने के अनेक साधनों में से एक साधन संस्कृत के छोटे-छोटे एकाङ्की नाटकों का प्रचार भी हो सकता है ऐसा हमारा अनुभव है। इसलिए हमने कुछ नवनिर्मित एकाङ्की नाटकों तथा संस्कृत के प्रत्येक उत्कृष्ट प्राचीन नाटक के एक-एक विशेष अभिनयोपयोगी अङ्कों के प्रकाशन का निश्चय किया है जिनकी सूची अन्तिम पृष्ठ पर दी गई है। यदि इस प्रकार के बीस-पचीस एकाङ्की नाटक प्रकाशित हो जायँ और उनका स्थान-स्थान पर गीत-वाद्य आदि के साथ अभिनय हो तो जनता में मनोरञ्जन, ज्ञानवर्धन तथा सांस्कृतिक वातावरण के निर्माण के साथ-साथ संस्कृत के प्रचार में भी बहुत सहायता मिल सकती है।

इस दृष्टिकोण से कार्यालय द्वारा प्रकाशित किये जाने वाले एकाङ्की नाटकों में यह द्वितीय नाटक प्रकाशित किया जा रहा है। प्रस्तुत नाटक में भोजप्रबन्ध के आधार पर महाराज भोज-कालीन संस्कृत प्रचार-सम्बन्धी पाँच दृश्य दिखलाये गये हैं। ये सभी दृश्य स्वतन्त्र भारत की जनता तथा शासक वर्गके लिए संस्कृत के सम्बन्ध में अपने विस्मृत कर्तव्य की स्मृति दिलाते हैं तथा उन्हें अपने कर्तव्य पर पुनः अग्रसर होने की प्रेरणा देते हैं। इसी स्थिति में राष्ट्र के इस नवाभ्युत्थान के समय अतीत भारत के स्वर्णमय सांस्कृतिक दृश्यों का अभिनय और भी महत्त्वपूर्ण हो जाता है इसमें कोई सन्देह नहीं।

इन पंक्तियों के साथ मैं समस्त शिक्षासंस्थाओं के प्रधानाचार्यों से अपने अपने विद्यालय में इस नाटक के अभिनय का आयोजन करने के लिए अनुरोध करता हूँ और इस पुस्तक के प्रकाशन में जिन संस्कृतानुरागी सज्जन पुरुषों ने आर्थिक सहायता देकर मुझे अनुगृहीत किया है उनके प्रति मैं अत्यन्त हार्दिक कृतज्ञता प्रगट करता हूँ।

कार्तिकी पूर्णिमा २०३७
वा रा ण सी

विनीत—
प्रणेता

# नाटक के पात्र



सामूहिक गानकर्ता ६
भगवान् शङ्कर ( गायकों के वीच में )
सूत्रधार
पारिपार्श्वक
महाराज भोज ( प्रथम, तृतीय एवं पंचम दृश्य )
प्रधानमन्त्री बुद्धिसागर ( प्रथम, द्वितीय, तृतीय एवं पंचम दृश्य )
कविजन ❀ ८ ( प्रथम, तृतीय एवं पंचम दृश्य )
द्वारपाल ( प्रथम, द्वितीय, तृतीय तथा पंचम दृश्य )
लक्ष्मीधर पण्डित ( प्रथम तथा पंचम दृश्य )
सूचना मन्त्री ( द्वितीय दृश्य )
शिक्षामन्त्री ( द्वितीय दृश्य )
दूताध्यक्ष द्वितीय दृश्य )
दूत ३ ( द्वितीय, चतुर्थ एवं पंचम दृश्य )
डिण्डिमवादक ( द्वितीय दृश्य )
वीणावादक कवि ( तृतीय दृश्य )
प्रधान आरक्षी ( थानेदार ) ( तृतीय दृश्य )
आरक्षी ( सिपाही ) तृतीय दृश्य )
भुक्कुण्ड चोर ( तृतीय दृश्य )
गोपालवालक ५ ( चतुर्थ दृश्य )
कुविन्द ( जुलाहा ) ( चतुर्थ एवं पंचम दृश्य )
मालाकार पत्नी ( पंचम दृश्य )
सीता ( पंचम दृश्य )

---

❀ कालिदास, वाण, दण्डी, भवभूति, महेश्वर तथा तीन अन्य ।

# भोजराज्ये संस्कृतसाम्राज्यम्

## सामूहिकगानम्

जय मृत्युञ्जय देव पुरारे ;
निगम-गमित विपदेक-निवारण !
मदन-मथन कलि-कलुष-विदारण
प्रणत-भुवन गिरिजेश गजारे ! जय०
शशिमण्डन भव-भव-भय-खण्डन !
मोदसदन हर दुरित-विकण्डन !
गंगाधर भूतेश यमारे ! जय०
श्रुतिरपि ते न गुणौघमनन्तम्
गणयति को नु वेद भगवन्तम्
निटिलनयन वचसामपि पारे ! जय०

( ततः प्रविशति सूत्रधारः पारिपार्श्वकश्च )

सूत्रधारः—( परितो विलोक्य ) अहो प्रियवयस्य ! मन्ये, सफल-मनोरथाः खलु वयम् अद्य ।

पारिपार्श्वकः—कथमिव ?

सूत्रधारः—यतो हि अनभ्यस्त-नाट्यकला-कौशलानामपि अस्माकं परिषदि एतावन्तो विविधविद्याविलासिनो निखिलकलाकोविदाश्च विद्वांसो

विराजमाना दृश्यन्ते। अयं च पुनः असंस्कृतज्ञानामपि स्त्रीबालवृद्धानां पुरवासिनां श्रूयमाणः कलकलः किमपि आश्चर्यमिव समुत्पादयति मे मानसे ।

**पारिपार्श्वकः**—( किञ्चिद् विहस्य ) प्रियमित्र ! किमत्र आश्चर्यं नाम ! शुभेन संकल्पेन, अदम्येन उत्साहेन, अखण्डितेन प्रयासेन, अविरुद्धेन मार्गेण च क्रियमाणेषु कार्येषु कुतो नाम कार्यसिद्धौ सन्देहलेशस्यापि अवसरो भवितुमर्हति ।

**सूत्रधारः**—सत्यमिदम्, परन्तु संस्कृतं सर्वे न जानन्तीति हेतुना मे हृदयं सन्देहेन दोलायमानमिव आसीत् ।

**पारिपार्श्वकः**—मित्रवर ! इदमपि न तावत् सन्देहस्य कारणं भवितुमर्हति । संस्कृतभाषा खलु इयं स्वकीयेन अनुपमेन पदमाधुर्येण अबुध्यमानापि सहृदयानां श्रोतॄणां हृदये कमपि दिव्यतमम् आनन्दसन्दोहं जनयतीति वैदेशिका अपि विद्वांसो मुक्तकण्ठं स्वीकुर्वन्ति ।

**सूत्रधारः**—( सविस्मयम् ) अहो किं वैदेशिका अपि विद्वांसः संस्कृतभाषाया माधुर्येण आकृष्टचेतसो भवन्ति ?

**पारिपार्श्वकः**—अहो, किं न श्रुतं भवता सुरभारतीप्रणयिनः श्री "हारेस हेमन विलसन" नामकस्य पाश्चात्यपण्डितस्य सुरगिरो माधुर्यमुपलक्ष्य विरचितं पद्यद्वयम् ? स महानुभावः कथयति—

अमृतं मधुरं सम्यक् संस्कृतं हि ततोऽधिकम् ।
देवभोग्यमिदं यस्माद्देवभाषेति कथ्यते ॥
न जाने विद्यते किन्तत् माधुर्यम् अत्र संस्कृते ।
सर्वदैव समुन्मत्ता येन वैदेशिका वयम् ॥

अस्माकं तु पुनः संस्कृतेन सह औरसः सम्बन्ध इति युक्त एव तत्र भारतीयानाम् अकारणः स्नेहातिरेकः । विशेषतश्च अस्मिन् राष्ट्राभ्युत्थानकाले ।

**सूत्रधारः**—बाढम्, यथार्थमभिहितं प्रियवयस्येन। साम्प्रतं च सर्वथा अपगतो मे मनसः संशयः। तत् सामाजिकानां यथा वृथाकाल-यापनेन मनसि उद्वेगो मा भूदिति त्वरितमेव गत्वा पात्राणि रङ्गमञ्चे अवतरणाय प्रेरणीयानि। पात्राणां निजनिज-वेषभूषा-सौष्ठव-सम्पादन-विषयकः असन्तोषः खलु प्रायेण विलम्बहेतुर्भवति अभिनयारम्भे इति मे भवद्गमनाय अनुरोधः।

**पारिपार्श्वकः**—बाढं, गच्छामि। ( किञ्चित् चलित्वा ) परन्तु प्रियवयस्य ! विस्मृतं खलु मया ! किं नाम नाटकं भवन्तः अद्य अभिनेतु-कामा इति ?

**सूत्रधारः**—मित्रवर ! विदितमेव भवतो यदिदानीं देवरिया जनपद-संस्कृतसम्मेलनस्य तृतीयो वार्षिकोत्सवसमारोहः सम्पाद्यमानो वर्तते[1]।

**पारिपार्श्वकः**—आम्; जानामि इदम्। ततः किम् ?

**सूत्रधारः**—तदेतस्मिन् अवसरे समागतानां सभ्यजनानां मनोविनो-दाय संस्कृतप्रचारविषयकः एव अभिनयः अभिनेतव्य इति विचार्य संस्कृतप्रचारैकव्रतिभिः श्रीवासुदेवद्विवेदिशास्त्रिभिः प्रणीतं "भोजराज्ये संस्कृत सामाज्यम्" नाम अभिनवम् एकाङ्किनाटकम् अभिनेतुं कामयामहे।

**पारिपाश्वकः**—(सहर्षम्) तर्हि सर्वथा अवसरानुरूपमिदं निर्वाचनं नाटकस्य। चिरात् समुपेक्षितायाः सुरभारत्या एतास्मिन् पुनरुत्थानकाले महाराजभोजस्य पुण्यस्मरणं शासकानां हृदये प्रसुप्तं संस्कृतविषयकं प्रेम पुनः जागरयिष्यति, तत्सम्बन्धे स्वकीयं कर्तव्यं च उद्बोधयिष्यति। नितान्तमेव देशकालानुरूपमिमं प्रयासं मन्ये। अलं च अधुना विलम्बेन। तत् आवाम् उभौ अपि सहैव गच्छावः।

**सूत्रधारः**—बाढम्, सहैव गच्छावः।

( इति निष्क्रान्तौ )

१. रेखाङ्कितो भागः यथावसरं परिवर्तनीयः।

# प्रथमं दृश्यम्

( स्थानम्—राजसभा । मध्ये महाराजो भोजः,
अमात्यवर्यो बुद्धिसागरः, कविजनाश्च
काव्यचर्चापरायणाः तिष्ठन्ति । )

**महाराजः**—कविवर्य्याः ! यद्यपि सन्ति अस्मिन् महीतले सुबहूनि सरसमधुराणि विलासवस्तूनि तथापि यथा ललितकाव्यकलापश्रवणेन तद्रसास्वादनेन च मे मनसि परितोषो भवति न तथा अन्येन केनापि वस्तुना । सुभाषितरसास्वादनस्य अग्रे अतितरां नीरसानीव प्रतिभान्ति भौतिकानि सुखोपभोगसाधनानि रसवस्तूनि ।

**प्रथमकविः**—सत्यमेवाह महाराजः । यतो हि—

नायं प्रयाति विकृतिं विरसो न यः स्यात्
न क्षीयते बहुजनैर्नितरां निपीतः ।
जाड्यं निहन्ति रुचिमेति करोति तृप्तिं
नूनं सुभाषितरसोऽन्यरसातिशायी ॥

**द्वितीयकविः**—( सहर्षम् ) महाराज ! न केवलम् एतावदेव,

सुभाषित-रसास्वाद-जातरोमाञ्चकञ्चुकाः ।
विनापि कामिनीसङ्गं कवयः सुखमासते ॥

( सर्वे हसन्ति )

**तृतीयकविः**—वस्तुतस्तु अस्मिन् विषमये संसारे यदि किमपि अमृतोपमं वस्तु वर्तते तर्हि तत् ललित-कोमल-कान्त-पदावली-समन्वितानां कवितानां सुमधुर-रसास्वादनमेव ।

संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ।
सुभाषितरसास्वादः सङ्गमः सज्जनैः सह ॥

चतुर्थ कविः—महाराज ! मनुष्यस्य वस्तुतः शोभाधायकानि भूषणानि अपि इमानि सूक्तिरत्नानि एव भवन्ति ।

किं हारैः किमु भूषणैः किमसमैः कर्णावतंसैरलं
केयूरैर्मणिकुण्डलैरलमलं साडम्बरैर्डम्बरैः ।
पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं
यन्निष्पोडितपार्वणामृत-करस्यन्दोपमाः सूक्तयः ॥

महाराजः—परं प्रथमतस्तु ते कविवरा एव जगतो वन्दनीयाः अभिनन्दनीयाश्च येषां प्रतिभाकरेभ्यो निस्सरन्ति इमानि संस्कार-निरपेक्षाणि सूक्तरत्नानि ।

ते भूमिपतयो जयन्ति नतयो येषु द्विषद्-भूभृताम्
ते वन्द्या यतयो विशन्ति मतयो येषां परं ब्रह्मणि ।
ते वन्द्याः कवयो वयोमदभर-व्याजृम्भमाणाङ्गना-
दृक्पाता इव तोषयन्ति हृदयं येषां गिरां भङ्गयः ।

पञ्चमकविः—परन्तु तादृशाः कवयोऽपि अङ्गुलिगणनीया एव ।

स्वप्रज्ञया कुञ्चिकयेव किञ्चित्
सारस्वतं वक्रिमभङ्गिभाजम् ।
कवीश्वरः कोऽपि पदार्थकोशम्
उद्घाट्य विश्वाभरणं करोति ॥

षष्ठः कविः—परन्तु महाराज ! नहि एतन्महत्त्वं कवीनां प्रत्युत कविजनसमाश्रयदातॄणां उदारहृदयाणां नरपतिरत्नानामेव ।

सप्तमकविः—अथ किम् ? कवयोऽपि तदानीमेव कवित्वनिर्माणे उत्साहवन्तो भवन्ति यदा भवादृशा गुणग्राहिणः काव्यकला-मर्मज्ञाश्च महानुभावाः कविजनान् अनुरूपेण आदरभरेण सभाजयन्ति । परं विरलानि एव ईदृशानि पुरुषरत्नानि—

तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः कोऽरविन्दानाम् अन्तरेण मधुव्रतम् ॥

अष्टमकविः—काव्यश्रमज्ञास्तु ततोऽपि अल्पीयांसः ।

शब्दानां विविनक्ति गोपनविधीन् आमोदते सूक्तिभिः
सान्द्रं लेढि रसामृतं वितनुते तात्पर्यमुद्रां च यः ।
पुण्यैः सङ्घटते विवेक्तृविरहादन्तर्मुखं ताम्यताम्
केषामेव कदाचिदेव सुधियां काव्यश्रमज्ञो जनः ॥

द्वारपालः—( सविनयं प्रणम्य ) विजयतां विजयतां महाराजः । महाराज ! द्रविडदेशात् समागतः कोऽपि लक्ष्मीधरनामा कविः परिषदि प्रवेशाभिलाषी द्वारदेशमध्यास्ते । तद् यथा आज्ञापयति देवः ।

महाराजः—प्रवेशय, निस्सन्देहं प्रवेशय । नहि एतस्यां परिषदि कदाचिदपि काव्यकलाकुशलानां साहित्य-सुधा-मुग्ध-हृदयानां सहृदयानां प्रवेशः निषिध्यते ।

द्वारपालः—यथा आज्ञापयति देवः । ( निष्क्रान्तः ) ।

( ततः प्रविशति कविः )

कविः—( हस्तौ उद्यम्य ) स्वस्त्यस्तु महाराजेभ्यः ।

महाराजः—( किञ्चिदुत्थाय आसनं निर्दिशन् ) आस्यताम्, अलं-क्रियताम् आसनमिदम् । अनुगृहीता इयं परिषत् श्रीमतां शुभागमनेन । इदानीं च भवद्वदनारविन्द-विर्निगताः सुधानिस्यन्दमधुरा गिरः समा-कर्णयितुं कुतूहलिनौ इव कर्णौ अस्माकम् ।

कविः—महाराज ! अनेकानेक-कविजन-मूर्धन्यमण्डिता इयं भवतां परिषत् । अहरहश्च समास्वाद्यते एव भवता सरस-कविता-सुधारसा-स्वादः । तत् किं नाम अत्र वैदुष्यं दर्शयामि ? तथापि नहि खलु भवन्नि-योगेन शून्येन भवितव्यमिति पद्यमेकं पठ्यते—

भोजप्रतापं तु विधाय धात्रा
शेषैर्निरस्तैः परमाणुभिः किम् ।
हरेः करेऽभूत् पविरम्बरे च
भानुः पयोधेरुदरे कृशानुः ॥

सभासदः—साधु साधु, वाढम् वाढम्, सुष्ठु सुष्ठु, धन्यं धन्यम् ।

महाराजः—( कवीन् उद्दिश्य ) अहो ! अपूर्वः कोऽपि प्रतिभायाः चमत्कारः, अकल्पनीयं च कल्पनाकौशलम् । ( कविमुद्दिश्य ) तदिमानि प्रत्यक्षरं लक्षरूप्यकाणि समर्प्यन्ते श्रीमद्भ्यः ।

कविः—( गृह्णन् ) महाराज ! अतितराम् अनुगृहीतोऽस्मि । सर्वथा भवत्स्वरूपानुरूप एवायं विद्वज्जन - समादर-व्यवहारः । परं देव ! अन्यदपि किञ्चिद् वर्तते अस्मदाकांक्षितम् । तन्निवेदनाय यदि अवसरो दीयेत श्रीमद्भिः तर्हि नितरामनुगृहीतो भविष्यामि ।

महाराजः—निस्सङ्कोचं निवेद्यताम् । अवश्यमेव विधास्यते भवत्समीहितपूर्तये प्रयत्नः ।

कविः—महाराजाधिराज ! अहमत्र सुदूरवर्तिनं द्रविडदेशं विहाय निवासकामनया सपरिवारः समागतोऽस्मि । तद् यदि सपरिवारस्य मे निवासयोग्यं किमपि भवनं प्रदीयेत तर्हि कृतकृत्यो भवेयम् ।

महाराजः—वाढम्, अस्यापि भवत्समीहितस्य पूर्तये वयं प्रवन्धं विधास्यामः । ( अमात्यं प्रति ) अमात्यवर्य ! यदि मदीयराजधान्यां कस्मिंश्चिद् गृहे कश्चित् मूर्खो निवसति, तर्हि तं ततो निस्सार्य, तत्रैव अस्य महाविदुषो निवासाय प्रवन्धो विधीयताम् ।

विप्रोऽपि यो भवेन्मूर्खः स पुराद् बहिरस्तु मे ।
कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम ॥

अमात्यः—यदाज्ञापयति महाराजः ।

( इति निष्क्रान्ताः सर्वे ) ।

# द्वितीयं दृश्यम्

( प्रधानमन्त्री अन्यमन्त्रिभिः सह विचारं कुर्वाणस्तिष्ठति )

**प्रधानमन्त्री**—मन्त्रिवर्याः ! अद्य खलु एका विषमा समस्या अस्माकं शिरसि समुपस्थिता। अस्याश्च बहुधा विचारयन्नपि किमपि समुचितं समाधानं न लभे। तदेतस्मिन् विषये अहं तत्रभवतां सत्परामर्शं सहयोगं च कामये।

**सूचनामन्त्री**—( सविस्मयम् ) महामान्याः ! का नाम इयं विषमा समस्या यस्याः समाधाने अगाधबुद्धयः श्रीमन्तोऽपि काठिन्यम् अनुभवन्ति ?

**प्रधानमन्त्री**—श्रूयताम्। अतीते दिवसे एको दक्षिणदेशवासी महाकविः सपरिवारो राजसभायां समागतः। तेन सपरिवारस्य आत्मनो निवासाय एकं निवासगृहं दातुं समभ्यर्थिता महाराजाः।

**सूचनामन्त्री**—ततो महाराजेन किं प्रतिपादितम् ?

**प्रधानमन्त्री**—ततो महाराजेन—यदि अस्माकं राजधान्यां कश्चित् मूर्खपरिवारो भवेत् तर्हि तं ततो निस्सार्य तत्रैव महाकवेः निवासाय प्रबन्धो विधेय इति अहं सविशेषमाज्ञप्तोऽस्मि।

**शिक्षामन्त्री**—( गम्भीरतां नाटयन् ) यद्येवं तर्हि निःसंशयमियं विषमा समस्या ! महाराजस्य आदेशेन, शिक्षाविभागस्य च सविशेषसंलग्नतया मूर्खतायाः नामापि न श्रूयते राज्ये।

**सूचनामन्त्री**—महामात्य ! अहं तु, एकोऽपि जनो निरक्षरो मूर्खो वा भविष्यतीति न सम्भावयामि। किं पुनः सम्पूर्णस्य परिवारस्य विषये वक्तव्यम् ?

**प्रधानमन्त्री**—ममापि अस्मिन् विषये ईदृशमेवानुमानम्। तथापि राजाज्ञा वर्तते। अतो दूतान् परितः सम्प्रेष्य परिज्ञातव्यमिदं यद् वस्तुतः कश्चित् राज्ये मूर्खः नरो नारी वा वर्तते ?

सूचनामन्त्री—तर्हि दूता आहूयन्ताम् ?

प्रधानमन्त्री—अथ किम् ।

सूचनामन्त्री—कः कोऽत्र भोः ?

द्वारपालः—( नेपथ्ये ) एष आगच्छामि !

सूचनामन्त्री—किं द्वारपालः ? द्वारपाल !

दूताध्यक्षस्य समीपे गत्वा केचन दूताः त्वरितं प्रेषणीया इति निवेदनीयं तथा सहैव दूतैः आगन्तव्यम् ।

द्वारपालः—यथा आदेशः ।

( त्रयः दूता अध्यक्षेण सह आगच्छन्ति )

दूताऽध्यक्षः—( सविनयं प्रणम्य ) महामात्याः ? किन्निमित्तनियं कृपा अद्य अस्माकमुपरि ?

प्रधानमन्त्री—ननु आदिष्टाःस्म वयं महाराजेन कस्यापि मूर्खपरिवारस्य गृहात् तं परिवारं निस्सार्य तस्मिन् गृहे एकस्य विद्वत्परिवारस्य निवासाय प्रबन्धं कर्तुम् । तत् कस्मिन् गृहे कश्चित् मूर्खः मूर्खपरिवारो वा निवसतीति अविलम्बितमेव वेदितव्यं युष्माभिः समन्तात् रहस्यानुसन्धाननकला-कोविदान् दूतान् सम्प्रेष्य ।

दूताऽध्यक्षः—महामात्य ! विषयेऽस्मिन् डिण्डिमघोषोऽपि कारयितव्य इति मे मतौ प्रतिभाति ।

प्रधानमन्त्री—साधु उक्तं भवता । अवश्यं डिण्डिमघोषोऽपि कारयितव्यः । तदाहूयतां डिण्डिमवादकः, आदिश्यतां च यथोचितसूचनाप्रचाराय ।

दूताऽध्यक्षः—उपस्थित एव वर्तते डिण्डिमवादकः, द्वारे च आदेशं प्रतीक्षमाणस्तिष्ठति । अयि भोः डिण्डिमवादक !

डिण्डिमवादकः—( उपसृत्य प्रणम्य च ) एष समुपस्थितोऽयं जनः ।

**दूताध्यक्षः**—शृणु, एकं परमावश्यकं वृत्तं वेदितव्यं वर्तते। तत् त्वया डिण्डिममघोषपूर्वकं एतत्पत्रलिखिता सूचना सर्वत्र नगरे सुस्पष्टं प्रसारणीया। न च एकापि वीथी परित्याज्या।

( सूचनापत्रं ददाति डिण्डिमवादकश्च स्वगतं क्षणं वाचयति )

( दूतान् प्रति ) भवद्भिश्च सर्वैः सपूर्णेऽपि नगरे भ्रामं भ्रामं कः कुत्र मूर्खो निवसतीति निपुणं ज्ञात्वा शीघ्रं सूचना देया त।

**प्रधानमन्त्री**—तर्हि विसर्जनीयाः सम्प्रति इमे समीहितकार्यसाधनाय। अस्माभिश्चापि तावत् प्रतीक्षा कर्तव्या कानिचित् दिनानि।

( सर्वे निष्क्रान्ताः )

**डिण्डिमवादकः**—( डिण्डिमं त्रिवारं वादयित्वा रङ्गमञ्चस्य उभयोः पार्श्वयोः सूचनां श्रावयति )

भो भो नागरिका नरा नार्यश्च ! श्रूयतां सावधानतया इयं सूचना। यदि भवतां गृहे वा, परिवारे वा, प्रतिवेशे वा कश्चित् निरक्षरो नरो वा नारी वा भवेत् तर्हि तस्य नाम-स्थानादि-सूचना यथाशीघ्रं सूचनाविभागे देया। यो जनः एकामपि ईदृशीं सूचनां दास्यति तस्मै सूचनाविभागतः पञ्चसहस्ररूप्यकाणां पुरस्कारः दास्यते। (सूचनां श्रावयन् निर्गच्छति)

## तृतीयं दृश्यम्।

( महाराजः मन्त्री कवयश्च राजसभायां विराजमाना वर्तन्ते )

**महाराजः**—कविवराः ! मनोमोदावहेषु काव्यकलाविषयेषु समस्यापूर्तिर्नाम एकं परमं चमत्कारजनकं वस्तु भवति, कवीनां च सद्यः कल्पनाशतप्रसवप्रगल्भायाः प्रतिभायाः परिचायकं च। तदद्य अहं समस्यापूर्तिप्रयोगेण मनोविनोदं कर्तुं समीहे।

**भवभूतिः**—यद्येवं महाराजस्याभिलाषः तर्हि अलं विलम्बितेन। दीयतां काचन समस्या।

**महाराजः**—अद्य प्रभातकाले अस्ताचले लम्वमानं चंद्रविम्वमवलोक्य सहसा मम मुखात् एका पंक्तिः विनिर्गता। तामेव पंक्ति त्रिभिः कविवरैः एकैकपंक्त्या पूर्यमाणामिच्छामि। सा च पंक्तिः इयं वर्तते—

**"चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे"।**

**भवभूतिः**—अतीव रमणीया इयं समस्या ! तदेतस्याः समस्यायाः पूर्तेः अहमेव तावत् प्रारम्भं करोमि।

**अरुणकिरण-जालैरन्तरिक्षे गतर्क्षे,**

**दण्डी**— **चलति शिशिरवाते मन्दमन्दं प्रभाते।**

**कालिदासः**—**युवतिजनकदम्बे मुक्तनाथौष्ठबिम्बे।**
**चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे॥**(सर्वे प्रसीदन्ति)

**महाराजः**—अथेदानीन् एका अन्या समस्या दीयते तस्याः पूर्तिः विधीयताम्।

**टंटं टटंटं टटटं टटं टं।**

( सर्वे हसन्ति )

**भवभूतिः**—( विहस्य ) महाराज ! अस्याः समस्यायाः पूर्ति तु महाकविः कालिदास एव कर्तुं शक्नोति।

**कालिदासः**—अस्तु, अहमेव करोमि; श्रूयताम्—

**राज्याभिषेके मदविह्वलायाः**
**कराच्च्युतो हेमघटस्तरुण्याः।**
**सोपानमासाद्य चकार शब्दं**
**टंटं टटंटं टटटं टटं टं॥**

( **सभासदः**—प्रसीदन्ति, हसन्ति, साधुवादं च ददते )

**द्वारपालः**—( प्रविश्य प्रणिपत्य च ) महाराज ! द्वारे केचन आरक्षिणः भुक्कुण्ड नामकं चौरं गृहीत्वा देवस्य दर्शनं प्रतीक्षमाणाः सन्ति। वद यथा आदेशो महाराजानाम्।

**महाराजः**—अहो एष महानन्तरायस्तावत् मध्ये समापतितः। परं राजधर्मस्तु जनतायाः सुखशान्तिपूर्वकं निवासाय काव्यचर्चापेक्षया दण्डकार्यमेव तावत् प्रधानं कर्तव्यं मन्यते। दण्डविभागस्य शिथिलतया एव देशे चौराणामुपद्रवा वर्द्धन्ते इति न तिरोहितं शासनाधिकारिणाम्। तत् प्रवेश्यन्ताम् आरक्षिणः।

( आरक्षिणः चौरेण सह प्रविशन्ति )

**महाराजः**—कोऽयं भोः, कुतः समानीतः, कश्च एतस्यापराधः ?

**प्रधान आरक्षी**—देव ! अनेन कुम्भिल्लकेन एकस्मिन् वेश्यागृहे प्रविश्य घातपातमार्गेण द्रव्याणि अपहृतानि। सोऽयं निगृह्य आनीतोऽस्माभिः श्रीचरणानामन्तिके।

**महाराजः**—यदि एवं तर्हि अवश्यमेव दण्डनीयोऽयं दुष्टः ( भुक्कुण्डं प्रति ) किं भोः सत्यमिदम् ?

**भुक्कुण्डः**—महाराज ! दैवस्य शपथं कृत्वा कथयामि। नाहं चौरः। न च वेश्यागृहे प्रविष्टः। न च मया कस्यचित् एका काकिणी अपि कदाचित् अपहृता। केवलं सम्प्रति भकाराक्षरस्य उपरि भगवतो भृकुटिः कुटिला संवृत्ता वर्तते येन सर्वेषामपि भकारादिनाम्नां पुरुषाणां सम्प्रति ईदृशी एव दयनीया दशा दृष्टिगोचरीभवति। श्रूयताम्—

भट्टिर्नष्टो भारविश्चापि नष्टो
भिक्षुर्नष्टो भीमसेनोऽपि नष्टः।
भुक्कुण्डोऽहं भूपतिस्त्वं च राजन्
भम्भापंक्तौ अन्तकः सन्निविष्टः॥

( सर्वे हसन्ति )

**महाराजः**—अस्तु नीयतां तावत्, रक्ष्यतां च वन्दिगृहे। ततो दोषं सम्यक् विविच्य दण्डनीयो मोचनीयो वा भविष्यति।

( चौरेण सह सर्वे गच्छन्ति )

**द्वारपालः**—महाराज ! कश्चिद् वीणवादनविशारदो महाकविः दूरदेशादागत्य सभाप्रवेशाय अनुमतिं याचते । तद् आज्ञापयन्तु देवपादा यथाभिलषितम् ।

**महाराजः**—अहो ! कविः, तत्रापि वीणावादनविशारदः ? प्रायेण दुर्लभा खलु ईदृशाः कवयो भवन्ति ।

**वाणः**—महाराज ! सबहुमानमाकारयितव्यः स महाभागः । वयमद्य साहित्यरसास्वादनेन सह सङ्गीतरसस्यापि आनन्दमनुभवामः ।

**महाराजः**—प्रवेश्यतां द्वारपाल ! शीघ्रं प्रवेश्यताम् ।

**कविः**—स्वस्त्यस्तु महाराजेभ्यः ।

**महाराजः**—कविपते ! सर्वथा वयं हृदयेन अभिनन्दामः श्रीमतां शुभागमनम् । अद्य साहित्येन सह सङ्गीतस्यापि रसास्वादनाय अधीरा इव प्रतिभाति परिषत् ।

**कविः**—महाराज—

तर्कव्याकरणाध्वनीनधिषणो नाहं न साहित्यवित्
नो जानामि विचित्रवाक्यरचनाचातुर्यमत्यद्भुतम् ।
देवी कापि विरञ्चिवल्लभसुता पाणिस्थवीणाकल-
क्वाणाभिज्ञरवं तथापि किमपि ब्रूते मुखस्था मम ॥

अतः परिषदोऽनुरोधरक्षणाय गीतमेकं समुपन्यस्ते श्रीमतां पुरस्तात् ।

भ्रमर विहर रे मन्दं मन्दम् ।

जाते प्रियवसन्त वन-भूपे, ज्वलिते दिशि दिशि सौरभ दीपे,
तरणि सुतायाः तीर समीपे, मुकुलकुलाकुल—नमिते नीपे ।

पायं पायं मधुमकरन्दम्,
भ्रमर विहर रे मन्दं मन्दम् ॥

( श्रुत्वा सर्वे अभिनन्दन्ति साधुवादं च वदते )

वाण:—महाराज !

मातङ्गीमिव माधुरीं ध्वनिविदो नैव स्पृशन्त्युत्तमां
व्युत्पत्तिं कुलकन्यकामिव रसोन्मत्ता न पश्यन्त्यमी ।
कस्तूरी-घनसार-सौरभ-सुहृद् व्युत्पत्ति-माधुर्ययोर्-
योगः कर्णरसायनं सुकृतिनः कस्यापि सम्पद्यते ॥

महाराज:—सर्वथा श्रद्धास्पदमिदं भवतां वचनम् । ( कविं प्रति ) कविवर्य ! भवतां साहित्य-सङ्गीत-सुधास्वादनेन आह्लादितान्तःकरणा परिषदियं श्रीमत्सेवायां द्रव्यराशिममुं समर्पयति ।

( कविः सादरं गृहीत्वा निर्गच्छति ) ।

महाराज:—कविवर्याः ! सम्प्रति सायन्तनी वेला संवृत्ता । तदेकया समस्यापूर्त्या सन्ध्यावर्णनं विधाय सभाविसर्जनं विधेयमिति ।

वाण:—उचितमेव इदं प्रभातकालवर्णनेन प्रारब्धायाः समस्यापूर्तेः सायङ्कालवर्णनेन समापनम् । तदिदानीमपि महारजैरेव समस्या दीयेत चेद् अस्माकं महती प्रसन्नता जायेत ।

महाराज:—अस्तु, तर्हि उपन्यस्यते पुनरियं तृतीया समस्या । अस्याः अपि पुनः पूर्ववदेव त्रिभिः कविवरैः एकैकपंक्तिपूरणेन पूर्तिर्विधेया । समस्या च इयं वर्तते—

परिपततिप योनिधौ पतङ्गः (पुनरेकवारं पठति)

वाण:— सरसिरुहामुदरेषु मत्तभृङ्गः ।

महेश्वर:— उपवनतरुकोटरे विहङ्गः ।

कालिदास:—युवतिजनेषु शनैः शनैरनङ्गः ।

( सर्वे हसन्ति, प्रसीदन्ति, साधुवादं च ददते )

पटाक्षेपः ।

# चतुर्थं दृश्यम्

( दूताः परिभ्रम्य आगत्य च विचारं कुर्वन्ति )

**प्रथमः**—भ्रातरः ! किमिदानीं कर्तव्यम् ? सप्त दिनानि व्यतीतानि। परःसहस्राणि च स्थानानि आहिण्डितानि। अतिशयं परिश्रान्ताः स्म। परन्तु एकोऽपि मूर्खो न मिलितः।

**द्वितीयः**—अहो एकं स्थानं वर्तते यत्र बह्वो मूर्खा मिलिष्यन्तीति सम्भावयामि। इदानीं मे स्मृतिपथमागतम्।

**तृतीयः**—एवं तर्हि महान् प्रमोदविषयः। कथय किं तत् स्थानं वर्तते कियद्दूरे च ?

**द्वितीयः**—अस्ति इतो नातिदूरे एव एकः आभीराणां महान् घोषः। तत्र प्रायः सर्वेऽपि आबालवृद्धा आभीराः कालानि अक्षराणि दृष्ट्वा पिपीलिकाः चलन्तीति उपहसन्ति।

**प्रथमः**—तर्हि निःसंशयं तत्र गमनेन अस्माकं मनोरथसिद्धिः स्यात्।

**द्वितीयः**—अतः तत्रैव चलितव्यम्।

**सर्वे**—तत्रैव चलितव्यम्। ( सर्वे गच्छन्ति )

( पञ्च षड् वा आभीरबालकाः प्रविशन्ति )

**प्रथमः**—अरे गोपाल ! जानासि कुत्र मम गौश्चरतीति ?

**गोपालः**—नहि भोः अहं तु न जानामि तव गौः कुत्र चरतीति।

**मोहनः**—अरे चिन्तां मा कुरुतः अत्रैव सर्वा गावः चरन्ति।

**कुमारः**—भ्रातः यदि एवं, तर्हि यावद् गावः चरन्ति तावत् एकं गीतं गीयताम्।

**सर्वे**—आम् आम् गीयताम्, गीयताम्।

**मुरली**—तर्हि अस्माभिः सर्वैः मिलित्वा गातव्यम्। अहं तावत् प्रथमं गायामि। पश्चात् सर्वैः मिलित्वा गातव्यम्। गीयताम्—

भजे व्रजैकभूषणं सदा निरस्तदूषणम् ।
नवीन-मेघ-सुन्दरं नमामि गोपुरन्दरम् ।।
यशोमती-यशोधरं व्रजाङ्गना-मनोहरम् ।
सुरारि-सन्निकन्दनं नमामि नन्दनन्दनम् ।।
अधीर-किङ्किणीधरं हिरण्यहारि-नूपुरम् ।
व्रजाङ्गणे विहारिणं नमामि गव्यहारिणम् ।।

( सर्वे गायन्ति तालिं दत्त्वा नृत्यन्ति च )

मुकुन्दः—(धावन् आगत्य) अरे अत्र यूयं सर्वे गीतं गायथ, तत्र च सर्वा गावो गत्वा बाबूसाहबस्य क्षेत्राणि चरन्ति । अद्य सर्वान् कुट्टयिष्यति

( सर्वे अरे रे इति कुर्वाणाः पलायन्ते )

प्रथमदूतः—( अन्यान् प्रति ) अहो आभीरबालकेष्वपि ईदृशो विद्याप्रचारः ?

द्वितीयः—अरे किं नाम आश्चर्यं विद्यानुरागरसिके राजनि शिक्षा-विभागे च अशिक्षानिर्मूलनाय बद्धपरिकरे। सूर्ये सहस्रकिरणैः समुद्यते सति किम् अन्धकारः सम्भवति ?

तृतीयः—सत्यं वदसि, परन्तु सम्प्रति अस्माकं का गतिः ?

प्रथमः—भ्रातरः ! मम तु एवं रोचते । इदानीं वृथाभ्रमणं विहाय समीपवर्तिनि एव कुविन्दानां निवासस्थाने चलितव्यमस्माभिः । ततः एव कमपि कुविन्दं गृहीत्वा मूर्खोऽयमिति राजसमीपं प्रापयामः ।

द्वितीयः—साधु निश्चितं भवता । कुविन्दानां कुले कुतः संस्कृत-ज्ञानं सम्भवति ?

( सर्वे गच्छन्ति एकं कुविन्दं च वस्त्रं वयन्तं गृह्णन्ति )

कुविन्दः—अरे रे ! कथं मां निरपराधं हठात् गृह्णीथ ?

प्रथमः—अरे मूर्ख कुविन्द ! गृहान्निःसर । तव गृहे अन्यः विद्वान् निवासं करिष्यति ।

**द्वितीय:**—न जानासि ! इदानीं राजधान्यां मूर्खाणां निवासाय आज्ञा नास्तीति ।

**कुविन्द:**—( हस्तं मोचयन् ) अरे श्रूयताम् । अहं मूर्खोऽस्मीति कथं भवन्तः जानन्ति ?

**प्रथम:**—अरे सम्प्रति वयं किमपि न श्रोष्यामः । शीघ्रं त्वया महाराजस्य समीपे गन्तव्यं तत्रैव च स्वकीयं पाण्डित्यं प्रदर्शनीयम् । ( इति धृत्वा नयन्ति ) ।

पटाक्षेप:

## पञ्चमं दृश्यम्

( महाराजः कवयः अमात्याश्च राजसभायां विराजन्ते )

**द्वारपाल:**—महाराज ! कापि मालाकारपत्नी देवस्य दर्शनं प्रतीक्षमाणा द्वारि तिष्ठति ।

**महाराज:**—एवम्, तर्हि प्रवेशय ताम् ।

**मालाकारपत्नी**—( प्रविश्य नमस्कृत्य च ) महाराज !

**समुन्नत-घनस्तन-स्तवक-चुम्बि-तुम्बीफल—**
**क्वणन्मधुर-वीणया विबुधलोक-लोलभ्रुवा ।**
**त्वदीयमुपगीयते हर-किरीटकोटि-स्फुरत्—**
**तुषारकर-कन्दली-किरणपूर-गौरं यशः ॥**

( सर्वे आश्चर्यचकिता भवन्ति भूरिशः साधुवादं च ददते )

**महाराज:**—अहो महती पदपद्धतिः, अपूर्वं च पदमाधुर्यम् !; तदेतस्यै प्रत्यक्षरं लक्षरूप्याणि दीयन्ताम् ।

**प्रधानमन्त्री**—यथादेशो देवपादानाम् ।

( रूप्यकाणि ददाति मालाकारपत्नी च गृहीत्वा गच्छति )

**द्वारपाल:**—महाराज ! मूर्खान्वेषणाय प्रवृत्ता दूता एकं मूर्खं कुविन्दं गृहीत्वा द्वारे समुपस्थिताः सन्ति । तेषां प्रवेशविषये महाराजाः प्रमाणम् ।

**महाराजः**—प्रवेशनीयास्ते । ( अमात्यं प्रति साश्चर्यं ) मन्त्रिवर्य ! अद्यापि राज्ये अशिक्षिता निवसन्तीति नितान्तं लज्जावहो विषयः ।

**दूताः**—( कुविन्दं गृहीत्वा ) महाराज ! महता परिश्रमेण अयमेको मूर्खकुविन्दः ससुपलब्धोऽस्माभिः ।

**कुविन्दः**—महाराज ! एते स्वयं मूर्खा दूता मां मूर्खं मत्वा गृहान्निःसारयन्ति । परन्तु महाराजैर्विवेचनीयम् अहं मूर्खो वा पण्डितो वा इति ।

काव्यं करोमि नहि चारुतरं करोमि
यत्नात् करोमि यदि चारुतरं करोमि ।
भूपाल-मौलिमणि-मण्डित-पादपीठ !
आज्ञां विधेहि कवयामि वयामि यामि ॥

( सर्वे साश्चर्यं श्रृण्वन्ति )

**महाराजः**—ललिता ते पदपंक्तिः, कवितामाधुर्यं च शोभनम् परन्तु कवित्वं विचार्य वक्तव्यं भवति ।

**कुविन्दः**—देव ! अत्रोत्तरं प्रतिभाति मे परं न वदामि । राजधर्मः पृथक् विद्वद्धर्माद् भवति ।

**महाराजः**—अस्ति चेदुत्तरं निर्भयो भूत्वा ब्रूहि ।

**कुविन्दः**—महाराज ! कालिदासादृते कमपि अहं कविं न मन्ये । कोऽस्ति भवतः सभायां कवितातत्त्वविद् विद्वान् कालिदासादन्यः ?

यत् सारस्वतवैभवं गुरुकृपा-पीयूष-पाकोद्भवं
तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम् ।
कासारे दिवसं वसन्नपि पयः पूरं परं पङ्किलं
कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः ॥

अयं मे वाग्गुम्फो विशद-पद-वैदग्ध्य-मधुरः
स्फुरद्बन्धो वन्ध्यः परहृदि कृतार्थः कविहृदि ।
कटाक्षो वामाक्ष्या दरदलित-नेत्रान्त-गलितः
कुमारे निःसारः स तु किमपि यूनः सुखयति ॥

सीताः--( सासूयम् )

**विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे ।**
**निन्दति कञ्चुकमेव प्रायः शुष्कस्तनी नारी ॥**

कुविन्दः--महाराज !

**बाल्ये सुतानां सुरतेऽङ्गनानां**
**स्तुतौ कवीनां समरे भटानाम् ।**
**त्वंकारयुक्ता हि गिरः प्रशस्ताः**
**कस्ते प्रभो मोहभरः स्मर त्वम् ॥**

कवयः—महाराज ! अहो अप्रतिमं पाण्डित्यमस्य कुविन्दकवेः ।

महाराजः—साधु कुविन्द कविराज साधु, अनेन तव विस्मय-कारिणा वैदुष्येण प्रसादितान्तःकरणा इयं विद्वत्परिषद् भवते इमानि प्रत्यक्षरं लक्षरूप्यकाणि समर्पयति । इदानीं निर्भयो भूत्वा भवान् निज-भवने सुखं निवसतु ।

कुविन्दः--महाराज ! मां कुविन्दमपि काव्यकलाकुशलं दृष्ट्वा भवन्तो मुधा आश्चर्यं कुर्वन्ति । किं भवादृशे विद्यानुरागिणि राजनि विद्यमाने शिक्षाविभागे च जागरूके स्वप्नेऽपि संभवति अशिक्षाया नामश्रवणमपि ?

महाराजः--कवे ! वयमपि इदमेव समीहामहे । अथ कथ्यताम्, किन्ते अपरं भूयः प्रियं सम्पादयामि ?

कुविन्दः—महाराज ! भवादृशे कल्पतरौ राजनि विराजमाने परि-पूर्णा एव सर्वेऽपि अस्माकं मनोरथाः । तथापि यदि भवान् मम प्रियं श्रोतुं सम्पादयितुं च इच्छति तर्हि इदं विधीयताम्—

**विश्व-वाङ्मय-मूर्धन्या ज्ञान-विज्ञान-शेवधिः ।**
**सर्वस्वं भारतीयानाम् इयं संस्कृतभारती ॥**
**अस्याः संस्कृतभाषाया विश्वकल्याणहेतवे ।**
**प्रचारो वर्द्धतान्नित्यं गेहे गेहे जने जने ॥**

---

*—स्त्रीपात्र के न मिलने पर यह पाठ छोड़ा जा सकता है ।

महाराजः—कुविन्दराज ! तथैव भविष्यति । ( लक्ष्मीधरपण्डितं प्रति ) महाकवे ! इदानीं भवतो निवासाय शीघ्रमेव काचिदन्या व्यवस्था विधास्यते । तावद् भवन्तः राजकीये अतिथिभवने कानिचिद् दिनानि अतिवाहयन्तु इति अस्माकमभ्यर्थना वर्तते ।

लक्ष्मीधरकविः—महाराज ! श्रीमतां राज्ये ईदृशं विद्याप्रचारं तथा यवनजातौ अपि एतादृशं संस्कृतकवित्वकल्पना-चमत्कारं दृष्ट्वा सर्वथा विस्मयमुग्धमानसोऽहं संवृत्तोस्मि । अलमिदानीं निवासचिन्तया । सम्प्रति केवलं इयमेव मे आकांक्षा हृदये उत्पद्यते यत्—

एषा संस्कृतभारती विजयतां वन्द्या महीमण्डले
देशे संस्कृतसेविनः समुचितं स्थानं लभन्तां पुनः ।
श्रेयः संस्कृत-संस्कृतिर्वितनुतां विश्वस्य भूयश्चिरं
प्रीतिं विन्दतु भारतीयजनता सर्वाधिकं संस्कृते ।

पटाक्षेपः ।

१—अभिनयान्ते सर्वेषां पात्राणां सामूहिकरूपेण गर्वानृत्यम् । मध्ये मुरलीं वादयन् श्रीकृष्णः तिष्ठति । तस्य समन्तात् सर्वे जनाः तालिका वादयन्तः मण्डलाकारेण भ्रमन्ति निम्नांकितं गीतं च गायन्ति ।

इह हि नन्दनन्दनेन तनु-विलिप्त-चन्दनेन ।
मुक्त-सर्व-बन्धनेन जितममर्त्य-नन्दनेन ॥
सकल-चित्त-रञ्जनेन निखिल-दुःख-भंजनेन ।
कालियस्य गञ्जनेन वस्तुतो निरञ्जनेन ॥ इह हि०

२—अथवा सामूहिकरूपेण राष्ट्रगानम् ।

—०—

# नाटक का संक्षिप्त कथाभाग

**प्रथम दृश्य—**

सामूहिक गान तथा सूत्रधार एवं परिपार्श्वक के कथोपकथन के पश्चात् महाराज भोज अपने प्रधानमन्त्री बुद्धिसागर तथा आठ कविजनों के साथ सभा में सिंहासन पर विराजमान हैं। आरम्भमें महाराज संसार की समस्त रसमय वस्तुओं की तुलना में काव्यरस को सर्वश्रेष्ठ बतलाते हैं और तदनन्तर समस्त कवि बारी-बारी से उनके कथन का विभिन्न दृष्टिकणों से समर्थन करते हुए प्रशंगवश उत्कृष्ट कवियों की दुर्लभता, राजकीय आश्रय के अभाव में काव्यसाधनाकी असम्भाव्यता तथा कवियों के श्रम का यथार्थ मूल्यांकन करनेवाले व्यक्तियों की विरलता आदि के सम्बन्धमें अपने-अपने विचार प्रगट करते हैं। इसी बीच द्वारपाल आकर द्रविड़ देश के एक लक्ष्मीधर पण्डित नामक कवि के आगमनकी सूचना देता है। महाराज के आदेश से कवि राजसभा में प्रवेश करते हैं और श्लोक द्वारा महाराज के प्रताप का वर्णन करते हैं। इस पर प्रसन्न हो महाराज उन्हें पुरस्कार देते हैं पर कवि पुरस्कार के अतिरिक्त अपने परिवार के निवास के लिए एक भवन की व्यवस्था के लिए भी अनुरोध करते हैं। इस पर महाराज प्रधानमन्त्री को आदेश देते हैं कि हमारे राज्य में जो मूर्ख हो उसे घर से निकाल कर उसी के घर में उक्त कवि के निवास की व्यवस्था की जाय। प्रधान मन्त्री इसे स्वीकार करते हैं और तत्पश्चात् सभा विसर्जित हो जाती है।

**द्वितीय दृश्य—**

प्रधानमन्त्री सूचनामन्त्री तथा शिक्षामन्त्री के साथ आते हैं और उनके समक्ष महाराज के आदेश को एक विकट समस्या के रूप में

उपस्थित करते हैं एवं उस विषय पर उनसे विचार-विमर्श करते हैं। दोनों मन्त्री राज्य में किसी मूर्ख का मिल सकना असम्भव मानकर महाराज के आदेश पर चिन्ता प्रगट करते हैं। अन्त में राजाज्ञा का पालन आवश्यक समझ कर द्वारपाल द्वारा दूताध्यक्ष को ३ दूतों के साथ वुलाया जाता है और राजाज्ञा के अनुसार राज्य में किसी मूर्ख को ढूँढ़ने के लिए दूतों को भेजने का उन्हें आदेश दिया जाता है। दूताध्यक्ष के परामर्श पर ढिंढोरा पिटवाने का भी निश्चय होता है और तदनुसार एक डिण्डिमवादक को वुलाकर उसे चारों ओर घोषित करने के लिए एक इस आशय की सूचना दी जाती है कि "यदि किसी व्यक्ति को कहीं किसी मूर्ख का पता हो तो वह सूचना विभाग को सूचित करे। ऐसी सूचना देने वाले को सूचना विभाग द्वारा सहस्र रुपयों का पुरस्कार दिया जायगा।" यह लिखित सूचना लेकर डिण्डिमवादक उसे पढ़ता है और मन्त्रियों के चले जाने पर रङ्गमञ्च से २-३ वार ढिंढोरा पीट कर उक्त सूचना मौखिक रूप से सुनाता है।

**तृतीय दृश्य—**

महाराज पुनः मन्त्री तथा कविजनों के साथ सभा में बैठते हैं और समस्यापूर्ति द्वारा मनोरञ्जन करने का प्रस्ताव रखते हैं। भवभूति द्वारा इसे सहर्ष स्वीकार करने तथा एक समस्या देने के लिए आग्रह करने पर महाराज सवके समक्ष एक प्रभातकालीन वर्णन विषयक पंक्ति समस्या के रूप में सुनते हैं और तीन कवियों द्वारा उसके एक-एक चरण की रचना कर उसे पूर्ण किए जाने की इच्छा प्रगट करते हैं। तदनुसार भवभूति, दण्डी एवं कालिदास एक-एक चरण द्वारा उस समस्या की पूर्ति करते हैं। तदनन्तर महाराज एक पुनः विचित्र समस्या रखते हैं और भवभूति के निर्देशानुसार उसकी पूर्ति कालिदास करते हैं। इसी वीच द्वारपाल आकर प्रधान आरक्षी द्वारा एक भुक्कुण्ड नामक चोर को पकड़ कर लाये जाने की सूचना देता

है। महाराज के आदेश पर उन तीनों का प्रवेश होता है। आरक्षी द्वारा चोर को अपराधी साबित करनेके पश्चात् महाराज चोर से उसका अपराध पूछते हैं पर वह अपराध को अस्वीकार करता हुआ एक श्लोक द्वारा यह बयान करता है कि महाराज ! आजकल 'भ' अक्षर वाले नाम के लोगों पर भगवान् की भृकुटी बहुत खराब है। इसीलिए 'भ' अक्षर वाले अनेक व्यक्ति मर चुके और हमारी भी इसी कारण दुर्दशा हो रही है। क्योंकि हमारे नाम में भी 'भ' है। और फिर एक 'भ' अक्षर वाले व्यक्ति आप ही बच जाते हैं।" इस उक्ति को सुन कर सब हँसते हैं और महाराज उसके अपराध पर पीछे विचार करने के लिए उसे छोड़ देते हैं। तत्पश्चात् द्वारपाल दक्षिण देश से एक वीणावादक कवि के आगमन की सूचना देता है और महाराज की स्वीकृति पर वीणा के साथ कवि का प्रवेश होता है। महाराज के समक्ष कवि एक श्लोक द्वारा अपनी संगीतज्ञता का परिचय देते हुए सभा के अनुरोध पर एक गीत सुनाते हैं। इस पर बाण साहित्य के साथ संगीत की भी समुचित योग्यता रखने वाले कवि जनों की दुर्लभता बतलाते हुए उक्त कवि की प्रशंसा में एक श्लोक पढ़ते हैं और महाराज उन्हें पुरस्कार देते हैं। अनन्तर पुरस्कार लेकर कवि चले जाते हैं। इतने ही में सायंकाल का समय होता है और महाराज सायंकाल वर्णन विषयक एक समस्या पुनः कवि जनों के समक्ष रखते हैं। इस समस्या की पूर्ति बाण, महेश्वर तथा कालिदास एक-एक चरण बनाकर करते हैं और तब महाराज की इच्छानुसार सभा विसर्जित होती है।

**चतुर्थ दृश्य—**

किसी मूर्ख व्यक्ति को राज्य में से ढूंढ निकालने के लिए निकले हुए दूत प्रवेश करते हैं और बहुत परिश्रम करने के बाद भी किसी मूर्ख के न मिलने पर चिन्ता प्रकट करते हैं तथा अग्रिम कार्यक्रम के सम्बन्ध में विचार-विनिमय करते हैं। कुछ सोच-विचार करके किसी

मूर्ख के मिलने की आशा में एक अहीरों की बस्ती में जाते हैं पर वहाँ भी चरवाहों तक में संस्कृत का प्रचार देखकर वहाँ से भी निराश हो लौटते हैं और पुनः विचार करते हैं। अन्त में सब मिल कर यह निश्चय करते हैं कि अब कुविन्दों ( जुलाहों ) की वस्ती में चला जाय और वहीं से किसी कुविन्द को पकड़कर मूर्ख के नाम पर उसे महाराज की सभा में उपस्थित किया जाय। क्योंकि जुलाहा तो संस्कृत जानता नहीं होगा। इस निश्चय के अनुसार वे कुविन्दों की टोली में जाते हैं और एक वस्त्र वीनते हुए कुविन्द को बार-बार समझाने पर भी जबर्दस्ती पकड़कर महाराज के दरबार में पहुँचाने के लिए ले जाते हैं।

**पञ्चम दृश्य—**

महाराज मन्त्री, कविजनों तथा लक्ष्मीधर पण्डित के साथ सभा में विराजमान हैं। द्वारपाल आता है और मालिन के आगमन की महाराज को सूचना देता है। अनन्तर महाराज की अनुमति से मालिन सभा में प्रवेश करती है और महाराज को प्रणाम कर एक दीर्घसमस्त पद वाले श्लोक पढ़कर महाराज का यशोगान करती है। उसको समस्त पदावली युक्त कविता से प्रसन्न हो महाराज उसे पुरस्कर देकर विदा करते हैं। इसके बाद द्वारपाल आकर दूतों द्वारा एक मूर्ख व्यक्ति के पकड़कर लाए जाने की सूचना देता है और महाराज उन्हें बुलाते हैं। दूत उस कुविन्द को मूर्ख कहते हुए राजा के समक्ष उपस्थित करते हैं पर वह कुविन्द दूतों को ही मूर्ख बतलाता है और एक चमत्कारपूर्ण रचना सुनाकर अपने पाण्डित्य का परिचय देते हुए राजा से निवेदन करता है कि आप की आज्ञा हो तो मैं कविता करूँ, या कपड़ा बीनूं अथवा चला जाऊँ ( आज्ञां विधेहि कवयामि वयामि यामि )। कुविन्द की इस रचना को सुनकर सब विस्मित तथा प्रसन्न होते हैं पर महाराज उसकी कविता में एक त्रुटि बतलाते हैं। इसे सुनकर कुविन्द कुछ रोष प्रकट करता है और साथ ही यह भी कहता है कि कालिदास को छोड़कर और कोई

कश्चि आपकी सभामें मर्मज्ञ नहीं हैं। इस पर कवियित्री सीता उस पर कटाक्ष करती है और कुविन्द महाराज के आक्षेप का कविता द्वारा उत्तर देता है। कुविन्द की अनेक रचनाओंको सुनकर सभासद तथा महाराज अत्यन्त प्रसन्न होते हैं और उसे पुरस्कार देते हैं तथा उसे तुनः अपने घरमें सानन्द रहनेकी अनुमति देते हैं और उससे पूछते हैं कि हम तुम्हारा और क्या प्रिय करें? इस पर कुविन्द बड़ी शिष्टताके साथ किसी वस्तु कीं आकाक्षा न प्रगट करता हुआ महाराज से केवल घर-घर तथा जन-जन में संस्कृत भाषाके प्रचार की कामना प्रकट करता है। महाराज इसे स्वीकार करते हुए उसे विदा करते हैं और लक्ष्मीधर पण्डितसे दूसरे निवास स्थानकी व्यस्थाके लिए आश्वासन देते हुए उन्हें तब तक अतिथिशाला में रहनेके लिए प्रार्थना करते हैं। इसपर लक्ष्मीधर पण्डित महाराजके राज्य में इस प्रकारका विद्या-प्रसार देख कर उसी से प्रसन्न होते हैं और निवास स्थान की चिन्ता न कर महाराज से निवेदन करते हैं कि मेरी अब केवल एक मात्र यही अभिलाषा है कि संस्कृत का सर्वत्र प्रचार हो, संस्कृतके विद्वान् देश में समुचित स्थान प्राप्त करें, संस्कृत-संस्कृति विश्व का कल्याण करे तथा भारतीय जनता संस्कृत में सर्वाधिक प्रेम रखे। इसके बाद नाटक समाप्त हो जाता है।

**सूचना**—प्रत्येक दृश्यके समान समाप्त होने पर मध्य में संस्कृत के गीतों तथा प्रहसनों का भी आयोजन होना चाहिए। इसके लिए कार्यालय द्वारा प्रकाशित संस्कृत गानमाला तथा संस्कृतप्रहसनम् नामक पुस्तक से सहायता लेनी चाहिए।